॥ श्रीः ॥

चौखम्भा राजसेवा ग्रन्थमाला
४२

# शिवसहस्रनामस्तोत्रम्

( शिवसहस्रनामस्तोत्रनामावलिसहितम् )

सम्पादक

याज्ञिकसम्राट् पण्डित वेणीरामशर्मा गौड



चौखम्भा ओरियन्टालिया

वाराणसी दिल्ली

॥ श्रीः ॥

चौखम्भा राजसेवा ग्रन्थमाला
४२

# शिवसहस्रनामस्तोत्रम्

( शिवसहस्रनामस्तोत्रनामावलिसहितम् )

लिङ्गपुराण

सम्पादक

याज्ञिकसम्राट् पण्डित वेणीरामशर्मा गौड

पृष्ठ 102-117



चौखम्भा ओरियन्टालिया
वाराणसी दिल्ली

प्रकाशक

**चौखम्भा ओरियन्टालिया**

पो. आ. चौखम्भा, पो. बाक्स नं. १०३२
गोकुल भवन, के. ३७/१०९, गोपाल मन्दिर लेन
वाराणसी—२२१००१ (भारत)
फोन ३३३४७६ टेलीग्राम : गोकुलोत्सव

शाखा—बंगली रोड, ९ यू. बी. जवाहर नगर
दिल्ली—११०००७ फोन :-२९११६१७, २३८७९०



द्वितीय संस्करण (१९९३)

मूल्य



मुद्रक—श्रीगोकुल मुद्रणालय, गोपाल मन्दिर लेन, वाराणसी

# प्राक्कथन

शिव का अर्थ 'कल्याण' है। कल्याणमय शिव की उपासना से मनुष्य शुद्ध, बुद्ध, भेदरहित होकर शिवस्वरूप बन जाता है।

शिव को 'तारक ब्रह्म' कहा गया है—

तारकं ब्रह्म परमं शिव इत्यक्षरद्वयम्।
नैतस्मादपरं किञ्चित् तारकं ब्रह्म सर्वदा॥

( शिवरहस्य, सप्तमांश अ० २३ )

'शिव यह दो अक्षर ही श्रेष्ठ 'तारक ब्रह्म' कहे जाते हैं, इनसे भिन्न और कोई दूसरा तारक ब्रह्म नहीं है।'

प्रकाशक

चौखम्भा ओरियन्टालिया

पो. आ. चौखम्भा, पो. बाक्स नं. १०३२

गोकुल भवन, के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी–२२१००१ (भारत)

फोन ३३३४७६ टेलीग्राम : गोकुलोत्सव

शाखा–बंगली रोड, ९ यू. बी. जवाहर नगर

दिल्ली–११०००७ फोन :-२९११६१७, २३८७९०



द्वितीय संस्करण (१९९३)

मूल्य [illegible]



मुद्रक–श्रीगोकुल मुद्रणालय, गोपाल मन्दिर लेन, वाराणसी

# प्राक्कथन

शिव का अर्थ 'कल्याण' है। कल्याणमय शिव की उपासना से मनुष्य शुद्ध, बुद्ध, भेदरहित होकर शिवस्वरूप बन जाता है।

शिव को 'तारक ब्रह्म' कहा गया है—

तारकं ब्रह्म परमं शिव इत्यक्षरद्वयम्।
नैतस्मादपरं किञ्चित् तारकं ब्रह्म सर्वदा॥

(शिवरहस्य, सप्तमांश अ० २३)

'शिव यह दो अक्षर ही श्रेष्ठ 'तारक ब्रह्म' कहे जाते हैं, इनसे भिन्न और कोई दूसरा तारक ब्रह्म नहीं है।

'परब्रह्मेति विज्ञेयं शिव इत्यक्षरद्वयम् ।'
( शिवरहस्य )

'शिव इन दो अक्षरों को परब्रह्म समझना चाहिये ।'

शिव की उपासना के अनेक भेद हैं। उनमें शिव की जपात्मक, पाठात्मक और हवनात्मक उपासना विशेष प्रचलित है। 'ॐ नमः शिवाय' इत्यादि शिव-मन्त्रों का जप करना जपात्मक उपासना, शिव-सम्बन्धी पुराणों और स्तोत्रों आदि का पाठ करना पाठात्मक उपासना और वेदोक्त, पुराणोक्त तथा तन्त्रोक्त मन्त्रों से हवन करना हवनात्मक उपासना कही जाती है। इनमें शिव की जपात्मक उपासना सर्वश्रेष्ठ कही गयी है। भगवान् श्रीकृष्ण ने 'यज्ञानां जपयज्ञोऽस्मि' ( गीता १०।२५ ) ऐसा कहा है।

शिव की समस्त उपासनाओं की अपेक्षा जपात्मक उपासना सरल है। इसको सभी मनुष्य कर सकते हैं। शिव की समस्त उपासनाओं में द्रव्य की आवश्यकता होती है, किन्तु जपयज्ञ में द्रव्य की आवश्यकता नहीं होती। जपयज्ञ में केवल श्रद्धा और विश्वास की आवश्यकता है। अतः मनुष्य अपनी रुचि और शक्ति के अनुसार शिव की उपर्युक्त उपासनाओं में से किसी भी उपासना को कर सकता है। शिव की किसी भी एक उपासना को करने से मनुष्य आध्यात्मिक, आधिदैविक और आधिभौतिक इन तीनों प्रकार के तापों से मुक्त होकर ऐहलौकिक और पारलौकिक सभी वस्तुओं को प्राप्त करता है और अन्त में जन्म-मरण के बन्धन से मुक्त होकर शिवसायुज्य प्राप्त करता है। अतः मनुष्यमात्र को भगवान् शिव की उपासना अवश्य करनी चाहिये।

शिव-भक्तों के कल्याणार्थ शिवसहस्रनामस्तोत्र और शिवसहस्र-नामावली प्रकाशित की गई है। यह दोनों ही अत्यन्त महत्त्वपूर्ण और लाभप्रद हैं। यदि श्रद्धापूर्वक इन दोनों का प्रतिदिन पाठ किया जाय तो आशुतोष भगवान् शिव शीघ्र ही पाठ-कर्ता को पुत्र, पौत्र, धन, धान्य, दीर्घायु और मोक्ष देते हैं।

काशी
मार्गशीर्ष
कृष्ण भैरवाष्टमी
संवत् २०३७

याज्ञिकसम्राट्
वेणीराम गौड वेदाचार्य



जगदम्बावलम्बाय निरालम्बाय शूलिने ।
जगत्त्रयकुटुम्बाय नमः साम्बाय शम्भवे ॥

# शिवसहस्रनामस्तोत्रम्

## ( शिवसहस्रनामस्तोत्रनामावलिसहितम् )



श्रीगणेशाय नमः

ॐ स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः ॥ १ ॥

सर्वात्मा सर्वविख्यातः सर्वस्सर्वकरो भवः ।

जटी चर्मी शिखण्डी च सर्वाङ्गस्सर्वभावनः ॥ २ ॥

हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ।



प्रवृत्तिश्च निवृत्तिश्च नियतश्शाश्वतो ध्रुवः ॥ ३ ॥

श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ।
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ॥ ४ ॥
उन्मत्तवेषः प्रच्छन्नः सर्वलोकप्रजापतिः ।
महारूपो महाकायो वृषरूपो महायशाः ॥ ५ ॥
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ।
लोकपालोऽन्तर्हितात्मा प्रसादो नीललोहितः ॥ ६ ॥
पवित्रं च महांश्चैव नियमो नियमाश्रितः ।
सर्वकर्मा स्वयंभूत आदिरादिकरो निधिः ॥ ७ ॥
सहस्राक्षो विशालाक्षस्सोमो नक्षत्रसाधकः ।
चन्द्रस्सूर्यश्शनिः केतुर्ग्रहो ग्रहपतिर्वरः ॥ ८ ॥

आदिरन्तो लयः कर्ता मृगबाणार्पणोऽनघः ।
महातपा घोरतपा अदीनो दीनसाधकः ॥ ९ ॥
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ।
योगी योज्यो महाबीजो महारेता महाबलः ॥ १० ॥
सुवर्णरेतास्सर्वज्ञस्सुबीजो बीजवाहनः ।
दशबाहुस्स्वनिमिषो नीलकण्ठ उमापतिः ॥ ११ ॥
विश्वरूपस्स्वयंश्रेष्ठो बलवीरो बलो गणः ।
गणकर्ता गणपतिर्दिग्वासाः काम एव च ॥ १२ ॥
मन्त्रवित्परमो मन्त्रः सर्वभावकरो हरः ।
कमण्डलुधरो धन्वी बाणहस्तकपालवान् ॥ १३ ॥

अशनी शतघ्नी खड्गी पट्टिसी सायुधी महान् ।

स्रवहस्तस्सुरूपश्च तेजस्तेजस्करो निधिः ॥ १४ ॥
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ।
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ॥ १५ ॥
शृगालरूपः सिद्धार्थो मुण्डस्सर्वशुभङ्करः ।
अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि ॥ १६ ॥
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभः स्थलः ।
त्रिजटश्चीरवासाश्च रुद्रस्सेनापतिर्विभुः ॥ १७ ॥
नक्तञ्चरोऽहश्चरश्च तिग्ममन्युस्सुवर्चसः ।
गजहा दैत्यहा कालो लोकधाता गुणाकरः ॥ १८ ॥
सिंहशार्दूलरूपश्च व्याघ्रचर्माम्बरावृतः ।

कालयोगी महानाथस्सर्वकामश्चतुष्पथः ॥ १९ ॥
निशाचरः प्रेतराजो भूतचारी महेश्वरः ।
बहुभूतो बहुधरः स्वर्भानुरमितो गतिः ॥ २० ॥
नृत्यप्रियो नित्यनर्तो नर्तकस्सर्वलालसः ।
महाघोरतपश्शूरो नित्योऽनीहो निरालयः ॥ २१ ॥
सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः ।
अमर्षणोऽमर्षणात्मा यज्ञहा कामनाशकः ॥ २२ ॥
दक्षयागापहारी च सुसहो मध्यमस्तथा ।
तेजोपहारी बलहा मुदितोऽर्थोऽजितो वरः ॥ २३ ॥
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ।
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ॥ २४ ॥

सुतीक्ष्णदशनश्चैव महाकायो महाननः ।
विष्वक्सेनो हरिर्यज्ञस्संयुगापीडवाहनः ॥ २५ ॥
तीक्ष्णतापश्च हर्यश्वस्सहायः कर्मकालवित् ।
विष्णुप्रसादितो यज्ञस्समुद्रो बडवामुखः ॥ २६ ॥
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ।
उग्रतेजा महातेजा जन्यो विजयकालवित् ॥ २७ ॥
ज्योतिषामयनं सिद्धिस्सर्वविग्रह एव च ।
शिखी मुण्डी जटी ज्वाली मूर्तिजो मूर्धगो बली ॥ २८ ॥
वैणवः पणवी ताली खली कालकटंकटः ।
नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः ॥ २९ ॥

प्रजापतिर्विश्वबाहुर्विभागः सर्वतोमुखः ।
विमोचनस्सुसरणो हिरण्यकवचोद्भवः ॥ २० ॥
मेघजो बलचारी च महीचारो स्तुतस्तथा ।
सर्वतूर्यविनोदी च सर्ववाद्यपरिग्रहः ॥ २१ ॥
व्यालरूपो गुहावासी ग्रहमाली तरङ्गवित् ।
त्रिदशः कालदृक्कर्मसर्वबन्धविमोचनः ॥ २२ ॥
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ।
सांख्यप्रसादो दुर्वासास्सर्वसाधुनिषेवितः ॥ २३ ॥
प्रस्कन्दनो विभागज्ञो ह्यतुल्यो यज्ञभागवित् ।
सर्ववासस्सर्वचारी दुर्वासा वासवोऽमरः ॥ २४ ॥
हैमो हेमकरो यज्ञस्सर्वधारी धरोत्तमः ।

लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ॥ ३५ ॥
संग्रहो निग्रहः कर्ता सर्वचीरनिवासनः ।
मुख्योऽमुख्यश्च देहश्च काहलिस्सर्वकामदः ॥ ३६ ॥
सर्वकालप्रसादश्च सुबलो बलरूपभृत् ।
सर्वकामप्रदश्चैव सर्वदस्सर्वतोमुखः ॥ ३७ ॥
आकाशनिर्विरूपश्च निंपातो ह्यवशः खगः ।
रौद्ररूपोंऽशुरादित्यो बहुरश्मिस्सुवर्चसी ॥ ३८ ॥
वसुवेगो महावेगो मनोवेगो निशाचरः ।
सर्ववासी श्रियावासी उपदेशकरोऽकरः ॥ ३९ ॥

मुनिरात्मा निरालोकस्संभग्नश्च सहस्रदः ।

पक्षी च प्लक्षरूपश्च अतिदीप्तो विशांपतिः ॥ ४० ॥
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ।
वामदेवश्च वामश्च प्राग्दक्षिण उदङ्मुखः ॥ ४१ ॥
सिद्धयोगी महर्षिश्च सिद्धार्थस्सिद्धसाधकः ।
भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ॥ ४२ ॥
महासेनो विशाखश्च षष्टिभागो गवांपतिः ।
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ॥ ४३ ॥
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः ।
वाचस्पत्यो वाजसनो नित्यमाश्रितपूजितः ॥ ४४ ॥
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ।

ईशान ईश्वरः कालो निशाचारी पिनाकभृत् ॥ ४५ ॥

निमित्तस्थो निमित्तं च नन्दिनन्दिकरो हरिः ।
नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः ॥ ४६ ॥
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ।
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥ ४७ ॥
लिङ्गाध्यक्षस्सुराध्यक्षो योगाध्यक्षो युगावहः ।
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ॥ ४८ ॥
इतिहासस्सकल्पश्च गौतमोऽथ निशाकरः ।
दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ॥ ४९ ॥
लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ।
अक्षरं परमं ब्रह्म बलवान् शक्र एव च ॥ ५० ॥

नीतिर्ह्यनीतिश्शुद्धात्मा शुद्धो मान्यो गतागतः ।
बहुप्रसादस्सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ॥ ५१ ॥
वेदकारो मन्त्रकारो विद्वान्समरमर्दनः ।
महामेघनिवासी च महाघोरो वशीकरः ॥ ५२ ॥
अग्निज्वालो महाज्वालो ह्यतिधूम्रो हुतो हविः ।
वृषभश्शङ्करो नित्यं वर्चस्वी धूमकेतनः ॥ ५३ ॥
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ।
स्वस्तिदस्स्वस्तिभागश्च भागी भागकरो लघुः ॥ ५४ ॥
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ।
कृष्णवर्णसुवर्णश्च इन्द्रियं सर्वदेहिनाम् ॥ ५५ ॥

महापादो महाहस्तो महाकायो महायशाः ।

महामूर्धा महामात्रो महानेत्रो निशालयः ॥ ५६ ॥
महान्तको महाकर्णो महोष्ठश्च महाहनुः ।
महानासो महाकम्बुर्महाग्रीवश्श्मशानभाक् ॥ ५७ ॥
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ।
लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ॥ ५८ ॥
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ।
महानखो महारोमा महाकेशो महाजटः ॥ ५९ ॥
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ।
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ॥ ६० ॥



वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ।

गण्डली मेरुधामा च देवाधिपतिरेव च ॥ ६१ ॥
अथर्वशीर्षस्सामास्य ऋक्सहस्रामितेक्षणः ।
यजुः पादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ॥ ६२ ॥
अमोघार्थः प्रसादश्च अभिगम्यस्सुदर्शनः ।
उपकारः प्रियस्सर्वः कनकः काञ्चनच्छविः ॥ ६३ ॥
नाभिर्नन्दकरो भावः पुष्करस्थपतिः स्थिरः ।
द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ॥ ६४ ॥
नक्तं कलिश्च कालश्च मकरः कालपूजितः ।
सगणो गणकारश्च भूतवाहनसारथिः ॥ ६५ ॥
भस्माशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः ।
लोकपालस्तथा लोको महात्मा सर्वपूजितः ॥ ६६ ॥

शुक्लस्त्रिशुक्लसम्पन्नश्शुचिर्भूतनिषेवितः ।
आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः ॥ ६७ ॥
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालस्सुनिश्चलः ।
कपिलः कपिशश्शुक्ल आयुश्चैव परोऽपरः ॥ ६८ ॥
गन्धर्वो ह्यदितिस्तार्क्ष्यस्सुविज्ञेयस्सुशारदः ।
परश्वधायुधो देवो ह्यनुकारो सुबान्धवः ॥ ६९ ॥
तुम्बवीणो महाक्रोधो ऊर्ध्वरेता जलेशयः ।
उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ॥ ७० ॥
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलो नलः ।
बन्धनो बन्धकर्ता च [illegible] ॥ ७१ ॥

बहुधाऽनिन्दितस्सर्वश्शङ्करश्चन्द्रशेखरः ॥ ७२ ॥
अमरेशो महादेवो विश्वदेवस्सुरारिहा ।
अहिर्बुध्न्योऽनिलाभश्च चेकितानो हरिस्तथा ॥ ७३ ॥
अजैकपाच्च कापाली त्रिशङ्कुरजितश्शिवः ।
धन्वन्तरिर्धूमकेतुस्स्कन्दो वैश्रवणस्तथा ॥ ७४ ॥
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ।
प्रभावस्सर्वगो वायुरर्यमा सविता रविः ॥ ७५ ॥
उषङ्गुश्च विधाता च मान्धाता भूतभावनः ।
विभुर्वर्णविभावी च सर्वकामगुणावहः ॥ ७६ ॥
पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ।

बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ॥ ७७ ॥
कुरुकर्ता कुरुवासी कुरुभूतो गुणौषधः ।
सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः ॥ ७८ ॥
देवदेवस्सुखासक्तस्सदसत्सर्वरत्नवित् ।
कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ॥ ७९ ॥
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ।
वणिजो वर्धकी वृक्षो वकुलश्चन्दनच्छदः ॥ ८० ॥
सारग्रीवो महाजत्रुरलोलश्च महौषधः ।
सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः ॥ ८१ ॥
सिंहनादस्सिंहदंष्ट्रस्सिंहगस्सिंहवाहनः ।
प्रभावात्मा जगत्कालः कालो लोकहितस्तरुः ॥ ८२ ॥

साराङ्गो नवचक्राङ्गः केतुमाली सभावनः ।
भूतालयो भूतपतिरहोरात्रमनिन्दितः ॥ ८३ ॥
वर्धितस्सर्वभूतानां निलयश्च विभुर्भवः ।
अमोघस्संयतो ह्यश्वो भोजनः प्राणधारणः ॥ ८४ ॥
धृतिमान् मतिमान् दक्षः सत्कृतश्च युगाधिपः ।
गोपाली गोपतिर्ग्रामो गोचर्मवसनो हरिः ॥ ८५ ॥
हिरण्यबाहुश्च तथा गुहापालः प्रवेशकः ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ॥ ८६ ॥
गान्धारश्च सुवासश्च तपस्सक्तो रतिर्नरः ।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः ॥ ८७ ॥

महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आवेशः सर्वगन्धसुखावहः ॥ ८८ ॥
तोरणस्तारणो वातः परिधीपतिखेचरः ।
संयोगो वर्धनो वृद्धो ह्यतिवृद्धो गुणाधिकः ॥ ८९ ॥
नित्य आत्मा सहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च देवो दिवि सुपर्वणः ॥ ९० ॥
आषाढश्च सुषाढश्च ध्रुवोऽथ हरिणो हरः ।
आवर्तमानेभ्यो वसुश्रेष्ठो महापथः ॥ ९१ ॥
...हारी विमर्शश्च सर्वलक्षणलक्षितः ।
...रथयोगी च सर्वयोगी ...बलः ॥ ९२ ॥

निर्जीवो जीवनो मन्त्रश्शुभाक्षो बहुकर्कशः ॥ ९३ ॥
रत्नभूतो रत्नाङ्गो महार्णवनिपानवित् ।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ॥ ९४ ॥
आरोहणोऽधिरोहश्च शीलधारी महायशाः ।
सेनाकल्पो महाकल्पो योगो योगकरो हरिः ॥ ९५ ॥
युगरूपो महारूपो महानागहनो वधः ।
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ॥ ९६ ॥
बहुमालो महामालश्शशी हरिसुलोचनः ।
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः ॥ ९७ ॥
त्रिलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः ।

बिन्दुर्विसर्गस्सुमुखः शरस्सर्वायुधस्सहः ॥ ९८ ॥

निवेदनस्सुखाजातः सुगन्धारो महाधनुः ।
गन्धपाली च भगवानुत्थानस्सर्वकर्मणाम् ॥ ९९ ॥

मन्थानो बहुलो वायुः सकलस्सर्वलोचनः ।
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान् ॥ १०० ॥

छत्रं सुछत्रो विख्यातो लोकस्सर्वाश्रयः क्रमः ।
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः ॥ १०१ ॥

हर्यक्षः ककुभो वज्री शतजिह्वस्सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रस्सर्वदेवमयो गुरुः ॥ १०२ ॥



सहस्रबाहुस्सर्वाङ्गः शरण्यस्सर्वलोककृत् ।

पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ॥ १०३ ॥
ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥ १०४ ॥
गभस्तिर्ब्रह्मकृद्ब्रह्म ब्रह्मविद्ब्रह्मणो गतिः ।
अनन्तरूपश्चैकात्मा तिग्मतेजास्स्वयम्भुवः ॥ १०५ ॥
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ।
चन्दनी पद्मनालाग्रस्सुरभ्युत्तरणो नरः ॥ १०६ ॥
कर्णिकारमहास्रग्वी नीलमौलिः पिनाकभृत् ।
उमापतिरुमाकान्तो जाह्नवीभृदुमाधवः ॥ १०७ ॥
वरो वराहो वरदो वरेण्यस्सुमहास्वनः ।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥ १०८ ॥

प्रीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ।
सर्वपार्श्वसुखस्त्र्यक्षो धर्मसाधारणो वरः ॥ १०९ ॥
चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान् सविताऽमृतः ॥ ११० ॥
व्यासस्सर्गस्सुसंक्षेपो विस्तरः पर्ययो नरः ।
ऋतुस्संवत्सरो मासः पक्षस्संख्यासमापनः ॥ १११ ॥
कला काष्ठा लवा मात्रा मुहूर्ताहः क्षपा क्षणाः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्सुनिर्गमः ॥ ११२ ॥
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ११३ ॥

निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः ।
देवासुरविनिर्माता देवासुरपरायणः ॥ ११४ ॥
देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥ ११५ ॥
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवादिदेवो देवर्षिर्देवासुरवरप्रदः ॥ ११६ ॥
देवासुरेश्वरो विश्वो देवतासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः ॥ ११७ ॥
उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ।
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ॥ ११८ ॥

विबुधोऽग्रवरस्सूक्ष्मस्सर्वदेवस्तपोमयः ।

सुयुक्तश्शोभनो वज्री प्रासानां प्रभवोऽव्ययः ॥ ११९ ॥
गुहः कान्तो निजस्सर्गः पवित्रं सर्वपावनः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥ १२० ॥
अभिरामस्सुरगणो विरामस्सर्वसाधनः ।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ॥ १२१ ॥
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ।
सिद्धार्थस्सिद्धभूतार्थोऽचिन्त्यस्सत्यव्रतश्शुचिः ॥ १२२ ॥
व्रताधिपः परं ब्रह्म भक्तानुग्रहकारकः ।
विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्धनो जगत् ॥ १२३ ॥
यथा प्रधानं भगवानिति भक्त्या स्तुतो मया ।

यं न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः ॥ १२४ ॥
स्तोतव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिं ।
भक्त्या त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥ १२५ ॥
ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो मतिमतां वरः ।
शिवमेभिः स्तुवन् देवं नामभिः पुष्टिवर्धनः ॥ १२६ ॥
नित्ययुक्तश्शुचिर्भूतः प्राप्नोत्यात्मानमात्मना ।
एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ॥ १२७ ॥
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्पराः ।
स्तूयमानो महादेवस्तुष्यते नियतात्मभिः ॥ १२८ ॥
भक्तानुकम्पी भगवानात्मसंस्थाकरो विभुः ।
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ॥ १२९ ॥

आस्तिकाश्श्रद्दधानाश्च बहुभिर्जन्मभिस्स्तवैः ।
भक्त्या ह्यनन्यमीशानं परं देवं सनातनम् ॥ १३० ॥
कर्मणा मनसा वाचा भावेनामिततेजसः ।
शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ॥ १३१ ॥
उन्मिषन्निमिषंश्चैव चिन्तयन्तः पुनः पुनः ।
शृण्वन्तः श्रावयन्तश्च कथयन्तश्च ते भवम् ॥ १३२ ॥
स्तुवन्तस्स्तूयमानाश्च तुष्यन्ति च रमन्ति च ।
जन्मकोटिसहस्रेषु नानासंसारयोनिषु ॥ १३३ ॥
जन्तोर्विगतपापस्य भवे भक्तिः प्रजायते ।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः ॥ १३४ ॥

भाविनः कारणं चास्य सर्वमुक्तस्य सर्वदा ।
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ॥ १३५ ॥
निर्विघ्ना निर्मला रुद्रे भक्तिरव्यभिचारिणी ।
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ॥ १३६ ॥
येन यान्ति परां सिद्धिं तद्भागवतचेतसः ।
ये सर्वभावानुगताः प्रपद्यन्ते महेश्वरम् ॥ १३७ ॥
प्रसन्नवत्सलो देवस्संसारात्तान् समुद्धरेत् ।
एवमन्ये निकुर्वन्ति देवास्संसारमोचनम् ॥ १३८ ॥
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम् ।
इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः ॥ १३९ ॥
कृत्वा सारस्वतः कृष्णतण्डिना शुभबुद्धिना ।

स्तवमेतं भगवतो ब्रह्मास्वयमधारयत् ॥ १४० ॥
गीयते च स बुध्येत ब्रह्मशङ्करसन्निधौ ।
इदं पुण्यं पवित्रं च सर्वदा पापनाशनम् ॥ १४१ ॥
योगदं मोक्षदं चैव स्वर्गदं तोषदं तथा ।
एवमेतत्पठन्ते य एकभक्त्या तु शङ्करम् ॥ १४२ ॥
या गतिस्सांख्ययोगानां व्रजन्ते तां गतिं तथा ।
स्तवमेनं प्रयत्नेन सदा रुद्रस्य सन्निधौ ॥ १४३ ॥
अब्दमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम् ।

एतद्रहस्यं परमं ब्रह्मणो हृदि संस्थितम् ॥ १४४ ॥
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ।

मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ॥ १४५ ॥
महता तपसा प्राप्तं तण्डिना ब्रह्मसद्मनि ।
तण्डिः प्रोवाच शुक्राय गौतमाय च भार्गवः ॥ १४६ ॥
वैवस्वताय मनवे गौतमः प्राह माधव ।
नारायणाय साध्याय मनुरिष्टाय धीमते ॥ १४७ ॥
यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ।
नाचिकेताय भगवानाह वैवस्वतो यमः ॥ १४८ ॥
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ।
मार्कण्डेयान्मया प्राप्तो नियमेन जनार्दन ॥ १४९ ॥
तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम् ।
स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन संमितम् ॥ १५० ॥

नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः ।
पिशाचा यातुधाना वा गुह्यका भुजगा अपि ॥ १५१ ॥
यः पठेत् शुचिः पार्थ ! ब्रह्मचारी जितेन्द्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥ १५२ ॥

इति श्रीशिवसहस्रनामस्तोत्ररत्नं सम्पूर्णम् ।



# शिवसहस्रनामस्तोत्रनामावलिः ।



ॐ श्रीगुरुवे नमः
ॐ श्रीगणपतये नमः
ॐ श्रीशिवाय नमः
ॐ स्थिराय नमः
ॐ स्थाणवे नमः
ॐ प्रभवे नमः
ॐ भीमाय नमः
ॐ प्रवराय नमः
ॐ वरदाय नमः
ॐ वराय नमः ॥ १० ॥
ॐ सर्वात्मने नमः
ॐ सर्वविख्याताय नमः
ॐ सर्वस्मै नमः
ॐ सर्वकराय नमः
ॐ भवाय नमः
ॐ जटिने नमः
ॐ चर्मिणे नमः
ॐ शिखण्डिने नमः
ॐ सर्वाङ्गाय नमः
ॐ सर्वभावनाय नमः ॥ २० ॥

ॐ हराय नमः
ॐ हरिणाक्षाय नमः
ॐ सर्वभूतहराय नमः
ॐ प्रभवे नमः
ॐ प्रवृत्तये नमः
ॐ निवृत्तये नमः
ॐ नियताय नमः
ॐ शाश्वताय नमः
ॐ ध्रुवाय नमः
ॐ श्मशानवासिने नमः ॥ ३० ॥
ॐ भगवते नमः
ॐ खचराय नमः
ॐ गोचराय नमः

ॐ अर्दनाय नमः
ॐ अभिवाद्याय नमः
ॐ महाकर्मणे नमः
ॐ तपस्विने नमः
ॐ भूतभावनाय नमः
ॐ उन्मत्तवेषप्रच्छन्नाय नमः
ॐ सर्वलोकप्रजापतये नमः ॥४०॥
ॐ महारूपाय नमः
ॐ महाकायाय नमः
ॐ वृषरूपाय नमः
ॐ महायशसे नमः
ॐ महात्मने नमः

ॐ विश्वरूपाय नमः
ॐ महाहनवे नमः
ॐ लोकपालाय नमः
ॐ अन्तर्हितात्मने नमः ॥ ५० ॥
ॐ प्रसादाय नमः
ॐ नीललोहिताय नमः
ॐ पवित्राय नमः
ॐ महते नमः
ॐ नियमाय नमः
ॐ नियमाश्रिताय नमः
ॐ सर्वकर्मणे नमः
ॐ स्वयंभूताय नमः
ॐ आदये नमः
ॐ आदकराय नमः ॥ ६० ॥
ॐ निधये नमः

ॐ सहस्राक्षाय नमः
ॐ विशालाक्षाय नमः
ॐ सोमाय नमः
ॐ नक्षत्रसाधकाय नमः
ॐ चन्द्राय नमः
ॐ सूर्याय नमः
ॐ शनये नमः
ॐ केतवे नमः
ॐ ग्रहाय नमः
ॐ ग्रहपतये नमः
ॐ वराय नमः
ॐ आद्यन्तलयकर्त्रे नमः
ॐ मृगबाणार्पणाय नमः
ॐ अनघाय नमः
ॐ महातपसे नमः
ॐ घोरतपसे नमः

ॐ अदीनाय नमः
ॐ दीनसाधकाय नमः
ॐ संवत्सरकाय नमः ॥ ८० ॥
ॐ मन्त्राय नमः
ॐ प्रमाणाय नमः
ॐ परमाय नमः
ॐ तपसे नमः
ॐ योगिने नमः
ॐ योज्याय नमः
ॐ महाबीजाय नमः
ॐ महारेतसे नमः
ॐ महाबलाय नमः

ॐ सर्वज्ञाय नमः
ॐ सुबीजाय नमः
ॐ बीजवाहनाय नमः
ॐ दशबाहवे नमः
ॐ अनिमिषाय नमः
ॐ नीलकण्ठाय नमः
ॐ उमापतये नमः
ॐ विश्वरूपाय नमः
ॐ स्वयंभूताय नमः
ॐ बलवीराय नमः ॥ १०० ॥
ॐ बलाय नमः
ॐ गणाय नमः
ॐ गणकर्त्रे नमः

ॐ दिग्वाससे नमः
ॐ कामाय नमः
ॐ मन्त्रविदे नमः
ॐ परमाय नमः
ॐ मन्त्राय नमः
ॐ सर्वभावकराय नमः ॥ ११० ॥
ॐ हराय नमः
ॐ कमण्डलुधराय नमः
ॐ धन्विने नमः
ॐ बाणहस्ताय नमः
ॐ कपालवते नमः
ॐ अशनये नमः
ॐ शतघ्निने नमः
ॐ खड्गिने नमः
ॐ पट्टिशिने नमः

ॐ आयुधिने नमः ॥ १२२ ॥
ॐ महते नमः
ॐ स्रुवहस्ताय नमः
ॐ सुरूपाय नमः
ॐ तेजसे नमः
ॐ तेजस्कराय नमः
ॐ निधये नमः
ॐ उष्णीषिणे नमः
ॐ सुवक्त्राय नमः
ॐ उदग्राय नमः
ॐ विनताय नमः ॥ १३० ॥
ॐ दीर्घाय नमः
ॐ हरिकेशाय नमः
ॐ सुतीर्थाय नमः
ॐ कृष्णाय नमः

ॐ सृगालरूपाय नमः
ॐ सिद्धार्थाय नमः
ॐ मुण्डाय नमः
ॐ सर्वशुभङ्कराय नमः
ॐ अजाय नमः
ॐ बहुरूपाय नमः ॥ १४० ॥
ॐ गङ्गाधारिणे नमः
ॐ कपर्दिने नमः
ॐ ऊर्ध्वरेतसे नमः
ॐ ऊर्ध्वलिङ्गाय नमः
ॐ ऊर्ध्वशायिने नमः
ॐ नभः स्थलाय नमः
ॐ त्रिजटाय नमः

ॐ चीरवाससे नमः
ॐ रुद्राय नमः
ॐ सेनापतये नमः ॥ १५० ॥
ॐ विभवे नमः
ॐ अहश्चराय नमः
ॐ नक्तञ्चराय नमः
ॐ तिग्ममन्यवे नमः
ॐ सुवर्चसाय नमः
ॐ गजघ्ने नमः
ॐ दैत्यघ्ने नमः
ॐ कालाय नमः
ॐ लोकधात्रे नमः
ॐ [illegible] ॥ १६० ॥

ॐ सिंहशार्दूलरूपाय नमः
ॐ व्याघ्रचर्माम्बरावृताय नमः
ॐ कालयोगिने नमः
ॐ महानाथाय नमः
ॐ सर्वकामाय नमः
ॐ चतुष्पथाय नमः
ॐ निशाचराय नमः
ॐ प्रेतराजाय नमः
ॐ भूतचारिणे नमः
ॐ महेश्वराय नमः ॥ १७० ॥
ॐ बहुभूताय नमः
ॐ बहुधराय नमः
ॐ स्वर्भानवे नमः
ॐ अमिताय नमः
ॐ गतये नमः

ॐ नृत्यप्रियाय नमः
ॐ नित्यनर्ताय नमः
ॐ नर्तकाय नमः
ॐ सर्वलालसाय नमः
ॐ महाघोरतपसे नमः ॥ १८० ॥
ॐ शूराय नमः
ॐ नित्याय नमः
ॐ अनीहाय नमः
ॐ निरालयाय नमः
ॐ सहस्रहस्ताय नमः
ॐ विजयाय नमः
ॐ व्यवसायाय नमः
ॐ अतन्द्रिताय नमः
ॐ अमर्षणाय नमः
ॐ मर्षणात्मने नमः ॥ १९० ॥

ॐ यज्ञघ्ने नमः
ॐ कामनाशकाय नमः
ॐ दक्षयागापहारिणे नमः
ॐ सुसहाय नमः
ॐ मध्यमाय नमः
ॐ तेजोपहारिणे नमः
ॐ बलघ्ने नमः
ॐ मुद्रिताय नमः
ॐ अर्थाय नमः
ॐ अजिताय नमः ॥ २०० ॥
ॐ वराय नमः
ॐ गम्भीरघोषाय नमः
ॐ गम्भीराय नमः

ॐ गम्भीरबलवाहनाय नमः
ॐ न्यग्रोधरूपाय नमः
ॐ न्यग्रोधवृक्षकर्णस्थितये नमः
ॐ विभवे नमः
ॐ सुतीक्ष्णदर्शनाय नमः
ॐ महाकायाय नमः
ॐ महाननाय नमः ॥ २१० ॥
ॐ विष्वक्सेनाय नमः
ॐ हरये नमः
ॐ यज्ञाय नमः
ॐ संयुगापीडवाहनाय नमः
ॐ तीक्ष्णतापाय नमः

ॐ सहायाय नमः
ॐ कर्मकालविदे नमः
ॐ विष्णुप्रसादिताय नमः
ॐ यज्ञाय नमः ॥ २२० ॥
ॐ समुद्राय नमः
ॐ वडवामुखाय नमः
ॐ हुताशनसहायाय नमः
ॐ प्रशान्तात्मने नमः
ॐ हुताशनाय नमः
ॐ उग्रतेजसे नमः
ॐ महातेजसे नमः
ॐ जन्याय नमः
ॐ विजयकालविदे नमः
ॐ ज्योतिषामयनाय ॥ २३० ॥
ॐ सिद्धये नमः

ॐ सर्वविग्रहाय नमः
ॐ शिखिने नमः
ॐ मुण्डिने नमः
ॐ जटिने नमः
ॐ ज्वालिने नमः
ॐ मूर्तिजाय नमः
ॐ मूर्धगाय नमः
ॐ बलिने नमः
ॐ वैष्णवाय नमः ॥ २४० ॥
ॐ प्रजविने नमः
ॐ तालिने नमः
ॐ खेलिने नमः
ॐ कालकटङ्कटाय नमः
ॐ नक्षत्रविग्रहमताय नमः
ॐ गुणबुद्धये नमः

ॐ लयाय नमः
ॐ अगमाय नमः
ॐ प्रजापतये नमः
ॐ विश्ववाहवे नमः ॥ २५० ॥
ॐ विभागाय नमः
ॐ सर्वतोमुखाय नमः
ॐ विमोचनाय नमः
ॐ सुसरणाय नमः
ॐ हिरण्यकवचोद्भवाय नमः
ॐ मेघजाय नमः
ॐ बलचारिणे नमः
ॐ महीचारिणे नमः
ॐ स्तुताय नमः

ॐ सर्वतूर्यविनोदिने नमः ॥२६०॥
ॐ सर्वतोद्यपरिग्रहाय नमः
ॐ व्यालरूपाय नमः
ॐ गुहावासिने नमः
ॐ ग्रहमालिने नमः
ॐ तरङ्गविदे नमः
ॐ त्रिदशाय नमः
ॐ कालदृशे नमः
ॐ कर्मसर्वबन्धविमोचनाय नमः
ॐ असुरेन्द्राणां बन्धनाय नमः
ॐ युधिशत्रुविनाशनाय नमः ॥२७०॥
ॐ सांख्यप्रसादाय नमः
ॐ दुर्वाससे नमः

ॐ सर्वसाधुनिषेविताय नमः
ॐ प्रस्कन्दाय नमः
ॐ विभागज्ञाय नमः
ॐ अतुल्याय नमः
ॐ यज्ञभागविदे नमः
ॐ सर्ववासाय नमः
ॐ सर्वचारिणे नमः
ॐ दुर्वाससे नमः ॥ २८० ॥
ॐ वासवाय नमः
ॐ अमराय नमः
ॐ हैमाय नमः
ॐ हेमकराय नमः
ॐ यज्ञाय नमः
ॐ सर्वधारिणे नमः
ॐ धरोत्तमाय नमः

ॐ लोहिताक्षाय नमः
ॐ महाक्षाय नमः
ॐ विजयाक्षाय नमः ॥ २९० ॥
ॐ विशारदाय नमः
ॐ संग्रहाय नमः
ॐ निग्रहाय नमः
ॐ कर्त्रे नमः
ॐ सर्पचीरनिवसनाय नमः
ॐ मुख्याय नमः
ॐ अमुख्याय नमः
ॐ देहाय नमः
ॐ काहलये नमः
ॐ सर्वकामदाय नमः ॥ ३०० ॥
ॐ सर्वकालप्रसादाय नमः
ॐ सुबलाय नमः

ॐ बलरूपभृते नमः
ॐ सर्वकामप्रदाय नमः
ॐ सर्वदाय नमः
ॐ सर्वतोमुखाय नमः
ॐ आकाशनिर्विरूपाय नमः
ॐ निपाताय नमः
ॐ अवशाय नमः
ॐ खगाय नमः ॥ ३१० ॥
ॐ रौद्ररूपाय नमः
ॐ अंशवे नमः
ॐ आदित्याय नमः
ॐ बहुरश्मये नमः
ॐ सुवर्चसिने नमः

ॐ वसुवेगाय नमः
ॐ महावेगाय नमः
ॐ मनोवेगाय नमः
ॐ निशाचराय नमः
ॐ सर्ववासिने नमः ॥ ३२० ॥
ॐ श्रियावासिने नमः
ॐ उपदेशकराय नमः
ॐ अकराय नमः
ॐ मुनये नमः
ॐ आत्मने नमः
ॐ निरालोकाय नमः
ॐ सम्भग्नाय नमः
ॐ सहस्रदाय नमः

ॐ पक्षिणे नमः
ॐ पृक्षरूपाय नमः ॥ ३३० ॥
ॐ अतिदीप्ताय नमः
ॐ विशांपतये नमः
ॐ उन्मादाय नमः
ॐ मदनाय नमः
ॐ कामाय नमः
ॐ अश्वत्थाय नमः
ॐ अर्थकराय नमः
ॐ यशसे नमः
ॐ वामदेवाय नमः
ॐ वामाय नमः ॥ ३४० ।
ॐ प्राग्दक्षिणोदङ्मुखाय नमः
ॐ सिद्धयोगिने नमः
ॐ महर्षये नमः

ॐ सिद्धार्थाय नमः
ॐ सिद्धसाधकाय नमः
ॐ भिक्षवे नमः
ॐ भिक्षुरूपाय नमः
ॐ विपणाय नमः
ॐ मृदवे नमः
ॐ अव्ययाय नमः ॥ ३५० ॥
ॐ महासेनाय नमः
ॐ विशाखाय ननः
ॐ षष्टिभागाय नमः
ॐ गवांपतये नमः
ॐ वज्रहस्ताय नमः
ॐ विष्कम्भिने नमः
ॐ चमूस्तम्भनाय नमः
ॐ वृत्तवृत्तकराय नमः

ॐ तालाय नमः
ॐ मघवे नमः ॥ ३६० ॥
ॐ मधुलोचनाय नमः
ॐ वाचस्पत्याय नमः
ॐ वाजसनाय नमः
ॐ नित्यमाश्रितपूजिताय नमः
ॐ ब्रह्मचारिणे नमः
ॐ लोकचारिणे नमः
ॐ सर्वचारिणे नमः
ॐ विचारविदे नमः
ॐ ईशानाय नमः
ॐ ईश्वराय नमः ॥ ३७० ॥
ॐ कालाय नमः

ॐ निशाचारिणे नमः
ॐ पिनाकभृते नमः
ॐ निमित्तस्थाय नमः
ॐ निमित्ताय नमः
ॐ नन्दये नमः
ॐ नन्दिकराय नमः
ॐ हरये नमः
ॐ नन्दीश्वराय नमः
ॐ नद्यै नमः ॥ ३८० ॥
ॐ नन्दनाय नमः
ॐ नन्दिवर्धनाय नमः
ॐ भगहारिणे नमः
ॐ निहन्त्रे नमः

ॐ कालाय नमः
ॐ ब्रह्मणे नमः
ॐ पितामहाय नमः
ॐ चतुर्मुखाय नमः
ॐ महालिङ्गाय नमः
ॐ चारुलिङ्गाय नमः ॥ ३९० ॥
ॐ लिङ्गाध्यक्षाय नमः
ॐ सुराध्यक्षाय नमः
ॐ योगाध्यक्षाय नमः
ॐ युगावहाय नमः
ॐ बीजाध्यक्षाय नमः
ॐ बीजकर्त्रे नमः
ॐ अध्यात्मानुगताय नमः
ॐ बलाय नमः
ॐ इतिहासाय नमः

ॐ कल्पाय नमः ॥ ४०० ॥
ॐ गौतमाय नमः
ॐ निशाकराय नमः
ॐ दम्भाय नमः
ॐ अदम्भाय नमः
ॐ वैदम्भाय नमः
ॐ वश्याय नमः
ॐ वशकराय नमः
ॐ कलये नमः
ॐ लोककर्त्रे नमः
ॐ पशुपतये नमः ॥ ४१० ॥
ॐ महाकर्त्रे नमः
ॐ अनौषधाय नमः
ॐ अक्षराय नमः
ॐ परमाय नमः

ॐ ब्रह्मणे नमः
ॐ बलवते नमः
ॐ सक्ताय नमः
ॐ नीतये नमः
ॐ अनीतये नमः
ॐ शुद्धात्मने नमः ॥ ४२० ॥
ॐ शुद्धाय नमः
ॐ मान्याय नमः
ॐ गतागताय नमः
ॐ बहुप्रसादाय नमः
ॐ सुस्वप्नाय नमः
ॐ दर्पणाय नमः
ॐ अमित्रजिते नमः

ॐ वेदकाराय नमः
ॐ मन्त्रकाराय नमः
ॐ विदुषे नमः ॥ ४३० ॥
ॐ समरमर्दनाय नमः
ॐ महामेघनिवासिने नमः
ॐ महाघोराय नमः
ॐ वशीकराय नमः
ॐ अग्निज्वालाय नमः
ॐ महाज्वालाय नमः
ॐ अतिधूम्राय नमः
ॐ हुताय नमः
ॐ हविषे नमः
ॐ वृषभाय नमः ॥ ४४० ॥

ॐ शङ्कराय नमः
ॐ नित्यवर्चस्विने नमः
ॐ धूमकेतनाय नमः
ॐ नीलाय नमः
ॐ अङ्गलुब्धाय नमः
ॐ शोभनाय नमः
ॐ ।नरवग्रहाय नमः
ॐ स्वस्तिदाय नमः
ॐ स्वस्तिभागाय नमः
ॐ भागिने नमः
ॐ भागकराय नमः
ॐ लघवे नमः
ॐ चटसङ्गाय नमः
ॐ महाङ्गाय नमः
ॐ महागर्भपरायणाय नमः

ॐ कृष्णवर्णाय नमः
ॐ सुवर्णाय नमः
ॐ सर्वदेहिनामिन्द्रियाय नमः
ॐ महापाताय नमः
ॐ महाहस्ताय नमः ॥ ४६० ॥
ॐ महाकायाय नमः
ॐ महायशसे नमः
ॐ महामू र्ने नमः
ॐ महामात्राय नमः
ॐ महानेत्राय नमः
ॐ निशालयाय नमः
ॐ महान्तकाय नमः
ॐ महाकर्णाय नमः
ॐ महोष्ठाय नमः
ॐ महाहनवे नमः ॥ ४७० ॥

ॐ महानासाय नमः
ॐ महाकम्बवे नमः
ॐ महाग्रीवाय नमः
ॐ श्मशानभाजे नमः
ॐ महावक्षसे नमः
ॐ महोरस्काय नमः
ॐ अन्तरात्मने नमः
ॐ मृगालयाय नमः
ॐ लम्बनाय नमः
ॐ लम्बितोष्ठाय नमः ॥ ४८० ॥
ॐ महामायाय नमः
ॐ पयोनिधये नमः
ॐ महादन्ताय नमः
ॐ महादंष्ट्राय नमः
ॐ महाजिह्वाय नमः
ॐ महामुखाय नमः
ॐ महानखाय नमः
ॐ महारोम्णे नमः
ॐ महाकेशाय नमः
ॐ महाजटाय नमः ॥ ४९० ॥
ॐ प्रसन्नाय नमः
ॐ प्रसादाय नमः
ॐ प्रत्ययाय नमः
ॐ गिरिसाधनाय नमः
ॐ स्नेहनाय नमः
ॐ अस्नेहनाय नमः

ॐ अजिताय नमः
ॐ महामुनये नमः
ॐ वृक्षाकाराय नमः
ॐ वृक्षकेतवे नमः ॥ ५०० ॥
ॐ अनलाय नमः
ॐ वायुवाहनाय नमः
ॐ गण्डलिने नमः
ॐ मेरुधाम्ने नमः
ॐ देवाधिपतये नमः
ॐ अथर्वशीर्षाय नमः
ॐ सामास्याय नमः
ॐ ऋक्सहस्रामितेक्षणाय नमः
ॐ यजुःपादभुजाय नमः
ॐ गुह्याय नमः ॥ ५१० ॥
ॐ प्रकाशाय नमः
ॐ जङ्गमाय नमः
ॐ अमोघार्थाय नमः
ॐ प्रसादाय नमः
ॐ अभिगम्याय नमः
ॐ सुदर्शनाय नमः
ॐ उपकाराय नमः
ॐ प्रियाय नमः
ॐ सर्वस्मै नमः
ॐ कनकाय नमः ॥ ५२० ॥
ॐ काञ्चनच्छवये नमः
ॐ नाभये नमः
ॐ नन्दिकराय नमः
ॐ भावाय नमः
ॐ पुष्कराय नमः
ॐ स्थपतये नमः

ॐ स्थिराय नमः
ॐ द्वादशाय नमः
ॐ त्रासनाय नमः
ॐ आद्याय नमः ॥ ५३० ॥
ॐ यज्ञाय नमः
ॐ यज्ञसमाहिताय नमः
ॐ नक्ताय नमः
ॐ कलये नमः
ॐ कालाय नमः
ॐ मकराय नमः
ॐ कालपूजिताय नमः
ॐ सगणाय नमः
ॐ गणकाराय नमः

ॐ भूतवाहनसारथये नमः ॥५४०॥
ॐ भस्माशयाय नमः
ॐ भस्मगोप्त्रे नमः
ॐ भस्मभूताय नमः
ॐ तरवे नमः
ॐ गणाय नमः
ॐ लोकपालाय नमः
ॐ लोकाय नमः
ॐ महात्मने नमः
ॐ सर्वपूजिताय नमः
ॐ शुक्लाय नमः ॥ ५५० ॥
ॐ त्रिशुक्लसम्पन्नाय नमः
ॐ शुचये नमः

ॐ भूतनिषेविताय नमः
ॐ आश्रमस्थाय नमः
ॐ क्रियावस्थाय नमः
ॐ विश्वकर्ममतये नमः
ॐ वराय नमः
ॐ विशालशाखाय नमः
ॐ ताम्रोष्ठाय नमः
ॐ अम्बुजालाय नमः ॥ ५६० ॥
ॐ सुनिश्चलाय नमः
ॐ कपिलाय नमः
ॐ कपिशाय नमः
ॐ शुक्लाय नमः
ॐ आयुषे नमः
ॐ परस्मै नमः
ॐ अपराय नमः
ॐ गन्धर्वाय नमः
ॐ अदितये नमः
ॐ तार्क्ष्याय नमः ॥ ५७० ॥
ॐ सुविज्ञेयाय नमः
ॐ सुशारदाय नमः
ॐ परश्वधायुधाय नमः
ॐ देवाय नमः
ॐ अनुकारिणे नमः
ॐ सुबान्धवाय नमः
ॐ तुम्बवीणाय नमः
ॐ महाक्रोधाय नमः
ॐ ऊर्ध्वरेतसे नमः
ॐ जलेशयाय नमः ॥ ५८० ॥
ॐ उग्राय नमः
ॐ वशंकराय नमः

ॐ वंशाय नमः
ॐ वंशनादाय नमः
ॐ अनिन्दिताय नमः
ॐ सर्वाङ्गरूपाय नमः
ॐ मायाविने नमः
ॐ सुहृदे नमः
ॐ अनिलाय नमः
ॐ अनलाय ॥ ५९० ॥
ॐ बन्धनाय नमः
ॐ बन्धकर्त्रे नमः,
ॐ सुबन्धनविमोचनाय नमः
ॐ यज्ञारये नमः
ॐ कामारये नमः
ॐ महादंष्ट्राय नमः
ॐ महायुधाय नमः
ॐ बहुधाऽनिन्दिताय नमः
ॐ सर्वस्मै नमः
ॐ शङ्कराय नमः ॥ ६०० ॥
ॐ चन्द्रशेखराय नमः
ॐ अमरेशाय नमः
ॐ महादेवाय नमः
ॐ विश्वदेवाय नमः
ॐ सुरारिघ्ने नमः
ॐ अहिर्बुध्न्याय नमः
ॐ अनिलाभाय नमः
ॐ चेकितानाय नमः

ॐ हविषे नमः
ॐ अजैकपादे नमः ॥ ६१० ॥
ॐ कापालिने नमः
ॐ त्रिशङ्कवे नमः
ॐ अजिताय नमः
ॐ शिवाय नमः
ॐ धन्वन्तरये नमः
ॐ धूमकेतवे नमः
ॐ स्कन्दाय नमः
ॐ वैश्रवणाय नमः
ॐ धात्रे नमः
ॐ शक्राय नमः ॥ ६२० ॥
ॐ विष्णवे नमः
ॐ मित्राय नमः
ॐ त्वष्ट्र

ॐ ध्रुवाय नमः
ॐ धराय नमः
ॐ प्रभावाय नमः
ॐ सर्वगाय नमः
ॐ वायवे नमः
ॐ अर्यम्णे नमः
ॐ सवित्रे नमः ॥ ६३० ॥
ॐ रवये नमः
ॐ उषङ्गवे नमः
ॐ विधात्रे नमः
ॐ मान्धात्रे नमः
ॐ भूतभावनाय नमः
ॐ विभवे नमः
ॐ वर्णविभाविने नमः
ॐ सर्वकामगुणावहाय नमः

ॐ पद्मनाभाय नमः
ॐ महागर्भाय नमः ॥ ६४० ॥
ॐ चन्द्रवक्त्राय नमः
ॐ अनिलाय नमः
ॐ अनलाय नमः
ॐ बलवते नमः
ॐ उपशान्ताय नमः
ॐ पुराणाय नमः
ॐ पुण्यचञ्चुरिणे नमः
ॐ कुरुकर्त्रे नमः
ॐ कुरुवासिने नमः
ॐ कुरुभूताय नमः ॥ ६५० ॥
ॐ गुणौषधाय नमः

ॐ सर्वाशयाय नमः
ॐ गर्भचारिणे नमः
ॐ सर्वेषां प्राणिनां पतये नमः
ॐ देवदेवाय नमः
ॐ सुखासक्ताय नमः
ॐ सदसत्सर्वरत्नविदे नमः
ॐ कैलासगिरिवासिने नमः
ॐ हिमवद्गिरिसंश्रयाय नमः
ॐ कूलहारिणे नमः ॥ ६६० ॥
ॐ कूलकर्त्रे नमः
ॐ बहुविद्याय नमः
ॐ बहुप्रदाय नमः
ॐ वणिजाय नमः

ॐ वर्धकिने नमः
ॐ वृक्षाय नमः
ॐ बकुलाय नमः
ॐ चन्दनच्छदाय नमः
ॐ सारग्रीवाय नमः
ॐ महाजत्रवे नमः ॥ ६७० ॥
ॐ अलोलाय नमः
ॐ महौषधाय नमः
ॐ सिद्धार्थकारिणे नमः
ॐ सिद्धार्थाय नमः
ॐ छन्दोव्याकरणोत्तराय नमः
ॐ सिंहनादाय नमः
ॐ सिंहदंष्ट्राय नमः
ॐ सिंहगाय नमः
ॐ सिंहवाहनाय नमः

ॐ प्रभावात्मने नमः ॥ ६८० ॥
ॐ जगत्कालाय नमः
ॐ कालाय नमः
ॐ लोकहिताय नमः
ॐ तरवे नमः
ॐ सारङ्गाय नमः
ॐ नवचक्राङ्गाय नमः
ॐ केतुमालिने नमः
ॐ सभावनाय नमः
ॐ भूतालयाय नमः
ॐ भूतपतये नमः ॥ ६९० ॥
ॐ अहोरात्राय नमः
ॐ अनिन्दिताय नमः
ॐ वर्धिताय नमः
ॐ सर्वभूतानां निलयाय नमः



ॐ विभवे नमः
ॐ भवाय नमः
ॐ अमोघाय नमः
ॐ संयताय नमः
ॐ अश्वाय नमः
ॐ भोजनाय नमः ॥ ७०० ॥
ॐ प्राणधारणाय नमः
ॐ धृतिमते नमः
ॐ मतिमते नमः
ॐ दक्षाय नमः
ॐ सत्कृताय नमः
ॐ युगाधिपाय नमः
ॐ गोपालिने नमः
ॐ गोपतये नमः
ॐ ग्रामाय नमः
ॐ गोचर्मवसनाय नमः ॥ ७१० ॥
ॐ हरये नमः
ॐ हिरण्यबाहवे नमः
ॐ गुहापालाय नमः
ॐ प्रवेशकाय नमः
ॐ प्रकृष्टारये नमः
ॐ महाहर्षाय नमः
ॐ जितकामाय नमः
ॐ जितेन्द्रियाय नमः
ॐ गान्धाराय नमः
ॐ सुवासाय नमः ॥ ७२० ॥

ॐ तपःसक्ताय नमः
ॐ रतये नमः
ॐ नराय नमः
ॐ महागीताय नमः
ॐ महानृत्याय नमः
ॐ अप्सरोगणसेविताय नमः
ॐ महाकेतवे नमः
ॐ महाधातवे नमः
ॐ नैकसानुचराय नमः
ॐ चलाय नमः ॥ ७३० ॥
ॐ आवेदनीयाय नमः
ॐ आदेशाय नमः
ॐ सर्वगन्धसुखावहाय नमः
ॐ तोरणाय नमः
ॐ तारणाय नमः
ॐ वाताय नमः

ॐ परिधीपतिखचराय नमः
ॐ संयोगाय नमः
ॐ वर्धनाय नमः
ॐ वृद्धाय नमः ॥ ७४० ॥
ॐ अतिवृद्धाय नमः
ॐ गुणाधिकाय नमः
ॐ नित्याय नमः
ॐ आत्मने नमः
ॐ सहायाय नमः
ॐ देवासुरपतये नमः
ॐ पत्ये नमः
ॐ युक्ताय नमः
ॐ युक्तबाहवे नमः
ॐ देवाय नमः ॥ ७५० ॥
ॐ दिविसुपर्वणाय नमः

ॐ आषाढाय नमः
ॐ सुषाढाय नमः
ॐ ध्रुवाय नमः
ॐ हरिणाय नमः
ॐ हराय नमः
ॐ वपुषे नमः
ॐ आवर्तमानाय नमः
ॐ वसुश्रेष्ठाय नमः
ॐ महापथाय नमः ॥ ७६० ॥
ॐ शिरोहारिणे नमः
ॐ विमर्शाय नमः
ॐ सर्वलक्षणलक्षिताय नमः
ॐ अक्षाय नमः

ॐ रथयोगिने नमः
ॐ सर्वयोगिने नमः
ॐ महाबालाय नमः
ॐ समाम्नायाय नमः
ॐ असमाम्नायाय नमः
ॐ तीर्थदेवाय नमः ॥ ७७० ॥
ॐ महारथाय नमः
ॐ निर्जीवाय नमः
ॐ जीवनाय नमः
ॐ मन्त्राय नमः
ॐ शुभाक्षाय नमः
ॐ बहुकर्कशाय नमः
ॐ रत्नप्रभूताय नमः

ॐ रक्तांगाय नमः
ॐ महार्णवनिपानविदे नमः
ॐ मूलाय नमः ॥ ७८० ॥
ॐ विशालाय नमः
ॐ अमृताय नमः
ॐ व्यक्ताव्यक्ताय नमः
ॐ तपोनिधये नमः
ॐ आरोहणाय नमः
ॐ अधिरोहाय नमः
ॐ शीलधारिणे नमः
ॐ महायशसे नमः
ॐ सेनाकल्पाय नमः
ॐ महाकल्पाय नमः ॥ ७९० ॥
ॐ योगाय नमः
ॐ योगकराय नमः

ॐ हरये नमः
ॐ युगरूपाय नमः
ॐ महारूपाय नमः
ॐ महानागहनाय नमः
ॐ वधाय नमः
ॐ न्यायनिर्वपणाय नमः
ॐ पादाय नमः
ॐ पण्डिताय नमः ॥ ८०० ॥
ॐ अचलोपमाय नमः
ॐ बहुमालाय नमः
ॐ महामालाय नमः
ॐ शशिहरिसुलोचनाय नमः
ॐ विस्ताराय नमः
ॐ लवणाय नमः
ॐ कूपाय नमः

ॐ त्रियुगाय नमः
ॐ सफलोदयाय नमः
ॐ त्रिलोचनाय नमः ॥ ८१० ॥
ॐ विषण्णाङ्गाय नमः
ॐ मणिविद्धाय नमः
ॐ जटाधराय नमः
ॐ बिन्दवे नमः
ॐ विसर्गाय नमः
ॐ सुमुखाय नमः
ॐ शराय नमः
ॐ सह्याय नमः
ॐ निवेदनाय नमः
ॐ सुखाजाताय नमः ॥ ८२० ॥

ॐ सुगन्धराय नमः
ॐ महाधनुषे नमः
ॐ गन्धपालिने नमः
ॐ भगवते नमः
ॐ सर्वकर्मणामुत्थानाय नमः
ॐ मन्थानाय नमः
ॐ बहुलाय नमः
ॐ वायवे नमः
ॐ सकलाय नमः
ॐ सर्वलोचनाय नमः ॥ ८३० ॥
ॐ तलाय नमः
ॐ तालाय नमः
ॐ करस्थालिने नमः

ॐ ऊर्ध्वसंहननाय नमः
ॐ महते नमः
ॐ छत्राय नमः
ॐ सुच्छत्राय नमः
ॐ विख्याताय नमः
ॐ लोकाय नमः
ॐ सर्वाश्रयाय ॥ ८४० ॥
ॐ क्रमाय नमः
ॐ मुण्डाय नमः
ॐ विरूपाय नमः
ॐ विकृताय नमः
ॐ दण्डिने नमः
ॐ कुण्डिने नमः
ॐ विकुर्वाणाय नमः
ॐ हर्यक्षाय नमः

ॐ ककुभाय नमः
ॐ वज्रिणे नमः ॥ ८५० ॥
ॐ शतजिह्वाय नमः
ॐ सहस्रपादे नमः
ॐ सहस्रमूर्ध्ने नमः
ॐ देवेन्द्राय नमः
ॐ सर्वदेवमयाय नमः
ॐ गुरवे नमः
ॐ सहस्रबाहवे नमः
ॐ सर्वाङ्गाय नमः
ॐ सरणाय नमः
ॐ सर्वलोककृते ॥ ८६० ॥
ॐ पवित्राय नमः
ॐ त्रिककुभे नमः
ॐ मन्त्राय नमः



ॐ कनिष्ठाय नमः

ॐ कृष्णपिङ्गलाय नमः

ॐ ब्रह्मदण्डविनिर्मात्रे नमः

ॐ शतघ्नीपाशशक्तिमते नमः

ॐ पद्मगर्भाय नमः

ॐ महागर्भाय नमः

ॐ ब्रह्मगर्भाय नमः ॥ ८७० ॥

ॐ जलोद्भवाय नमः

ॐ गभस्तये नमः

ॐ ब्रह्मकृते नमः

ॐ ब्रह्मणे नमः



ॐ ब्रह्मविदे नमः

ॐ ब्राह्मणाय नमः

ॐ गतये नमः

ॐ अनन्तरूपाय नमः

ॐ एकात्मने नमः

ॐ तिग्मतेजसे नमः ॥ ८८० ॥

ॐ स्वयंभुवे नमः

ॐ ऊर्ध्वगात्मने नमः

ॐ पशुपतये नमः

ॐ वातरंहसे नमः

ॐ मनोजवाय नमः

ॐ चन्दनिने नमः

ॐ पद्मनालाग्राय नमः

ॐ सुरभ्युत्तरणाय नमः

ॐ नराय नमः

ॐ कर्णिकारमहास्त्रग्विणे नमः ८९०
ॐ नीलमौलये नमः
ॐ पिनाकभृते नमः
ॐ उमापतये नमः
ॐ उमाकान्ताय नमः
ॐ जाह्नवीभृते नमः
ॐ उमाधवाय नमः
ॐ वराय नमः
ॐ वराहाय नमः
ॐ वरदाय नमः
ॐ वरेण्याय नमः ॥ ९०० ॥
ॐ सुमहास्वनाय नमः
ॐ महाप्रसादाय नमः
ॐ दमनाय नमः
ॐ शत्रुघ्ने नमः
ॐ श्वेतपिङ्गलाय नमः
ॐ प्रीतात्मने नमः
ॐ परमात्मने नमः
ॐ प्रधानधृते नमः
ॐ सर्वपार्श्वमुखाय नमः ॥ ९१० ॥
ॐ त्र्यक्षाय नमः
ॐ धर्मसाधारणाय नमः
ॐ वराय नमः
ॐ चराचरात्मने नमः
ॐ सूक्ष्मात्मने नमः
ॐ अमृताय नमः
ॐ गोवृषेश्वराय नमः
ॐ साध्यर्षये नमः
ॐ वसवे नमः
ॐ आदित्याय नमः ॥ ९२० ॥

ॐ विवस्वते नमः
ॐ सवित्रे नमः
ॐ अमृताय नमः
ॐ व्यासाय नमः
ॐ सर्गाय नमः
ॐ सुसंक्षेपाय नमः
ॐ विस्तराय नमः
ॐ पर्ययाय नमः
ॐ नराय नमः
ॐ ऋतवे नमः ॥ ६३० ॥
ॐ संवत्सराय नमः
ॐ मासाय नमः
ॐ पक्षाय नमः
ॐ संख्यासमापनाय नमः
ॐ कलाकाष्ठालवमात्रामुहूर्ताहःक्षपाक्षणाय नमः
ॐ विश्वक्षेत्राय नमः
ॐ प्रजाबीजाय नमः
ॐ लिङ्गाय नमः
ॐ आद्याय नमः
ॐ सुनिर्गमाय नमः ॥ ६४० ॥
ॐ सदसद्व्यक्ताय नमः
ॐ अव्यक्ताय नमः
ॐ पित्रे नमः
ॐ मात्रे नमः
ॐ पितामहाय नमः

ॐ स्वर्गद्वाराय नमः
ॐ प्रजाद्वाराय नमः
ॐ मोक्षद्वाराय नमः
ॐ त्रिविष्टपाय नमः
ॐ निर्वाणाय नमः ॥ ६५० ॥
ॐ ह्लादनाय नमः
ॐ ब्रह्मलोकाय नमः
ॐ परागतये नमः
ॐ देवासुरविनिर्मात्रे नमः
ॐ देवासुरपरायणाय नमः
ॐ देवासुरगुरवे नमः
ॐ देवाय नमः
ॐ देवासुरनमस्कृताय नमः
ॐ देवासुरमहामात्राय नमः
ॐ देवासुरगणाश्रयाय नमः ॥ ६६० ॥

ॐ देवासुरगणाध्यक्षाय नमः
ॐ देवासुरगणाग्रण्ये नमः
ॐ देवादिदेवाय नमः
ॐ देवर्षये नमः
ॐ देवासुरवरप्रदाय नमः
ॐ देवासुरेश्वराय नमः
ॐ विश्वस्मै नमः
ॐ देवासुरमहेश्वराय नमः
ॐ सर्वदेवमयाय नमः
ॐ अचिन्त्याय नमः ॥ ६७० ॥
ॐ देवतात्मने नमः
ॐ आत्मसम्भवाय नमः
ॐ उद्भिदे नमः
ॐ त्रिविक्रमाय नमः
ॐ वैद्याय नमः

ॐ विरजाय नमः
ॐ नीरजाय नमः
ॐ अमराय नमः
ॐ ईड्याय नमः
ॐ हस्तीश्वराय नमः ॥ ९८० ॥
ॐ व्याघ्राय नमः
ॐ देवसिंहाय नमः
ॐ नरर्षभाय नमः
ॐ विबुधाय नमः
ॐ अग्रवराय नमः
ॐ सूक्ष्माय नमः
ॐ सर्वदेवाय नमः
ॐ तपोमयाय नमः
ॐ सुयुक्ताय नमः
ॐ शोभनाय नमः ॥ ९९० ॥
ॐ वज्रिणे नमः
ॐ प्रासानाम्प्रभवाय नमः
ॐ अव्ययाय नमः
ॐ गुहाय नमः
ॐ कान्ताय नमः
ॐ निजाय नमः
ॐ सर्गाय नमः
ॐ पवित्राय नमः
ॐ सर्वपावनाय नमः
ॐ शृङ्गिणे नमः ॥ १००० ॥
ॐ शृङ्गप्रियाय नमः

ॐ बभ्रवे नमः
ॐ राजराजाय नमः
ॐ निरामयाय नमः
ॐ अभिरामाय नमः
ॐ सुरगणाय नमः
ॐ विरामाय नमः
ॐ सर्वसाधनाय नमः
ॐ ललाटाक्षाय नमः
ॐ विश्वदेवाय नमः ॥ १०१० ॥
ॐ हरिणाय नमः
ॐ ब्रह्मवर्चसाय नमः
ॐ स्थावराणाम्पतये नमः
ॐ नि[illegible]न्द्रियवर्धनाय नमः
ॐ [illegible]र्थाय नमः

ॐ सिद्धभूतार्थाय नमः
ॐ अचिन्त्याय नमः
ॐ सत्यव्रताय नमः
ॐ शुचये नमः
ॐ व्रताधिपाय नमः ॥ १०२० ॥
ॐ परस्मै नमः
ॐ ब्रह्मणे नमः
ॐ भक्तानुग्रहकारकाय नमः
ॐ विमुक्ताय नमः
ॐ मुक्ततेजसे नमः
ॐ श्रीमते नमः
ॐ श्रीवर्धनाय नमः
ॐ जगते नमः
ॐ श्रीसाम्बसदाशिवाय नमः



इति श्रीशिवसहस्रनामावलिः सम्पूर्णा ।

## शिवपूजनविधिः

लेखक—याज्ञिकसम्राट् पण्डित वेणीराम गौड

शिवभक्तों के लिये 'शिवपूजनविधिः' पुस्तक प्रकाशित की गई है। इस पुस्तक में वैदिक और पौराणिक मन्त्रों के द्वारा शिव की सुन्दर ढंग से पूजनविधि लिखी गई है। शिवपूजनविधि में आवरण-पूजन, आरती, पुष्पाञ्जलि आदि अनेक शिवपूजनसम्बन्धी विषय दिये गये हैं, जिससे यह पुस्तक अत्यन्त महत्त्वपूर्ण बन गई है। शिवपूजन की ये इससे श्रेष्ठ और कोई पुस्तक नहीं है।

## विष्णुपूजनविधिः

यह पुस्तक विष्णु के भक्तों के उपासकों के लिये लिखी गई है। इस पुस्तक में वैदिक और पौराणिक दोनों प्रकार के मन्त्र दिये गये हैं, जिससे यह पुस्तक अत्यन्त महत्त्वपूर्ण हो गई है। पुस्तक के प्रारम्भ में विष्णु भगवान् के पूजन की महत्ता और आवश्यकता का उल्लेख कर दिया है, जो कि सभी के लिये पठनीय और मननीय है।



प्राप्तिस्थान—चौखम्भा ओरियन्टालिया, वाराणसी, दिल्ली

# शिवपूजनविधिः

## लेखक—याज्ञिकसम्राट् पण्डित वेणीराम गौड

शिवभक्तों के लिये 'शिवपूजनविधिः' पुस्तक प्रकाशित की गई है। इस पुस्तक में वैदिक और पौराणिक मन्त्रों के द्वारा शिव की सुन्दर ढंग से पूजनविधि लिखी गई है। शिवपूजनविधि में आवरण-पूजन, आरती, पुष्पाञ्जलि आदि अनेक शिवपूजनसम्बन्धी विषय दिये गये हैं, जिससे यह पुस्तक अत्यन्त महत्त्वपूर्ण बन गई है। शिवपूजन की ये इससे श्रेष्ठ और कोई पुस्तक नहीं है।

# विष्णुपूजनविधिः

यह पुस्तक विष्णु के भक्तों के उपासकों के लिये लिखी गई है। इस पुस्तक में वैदिक और पौराणिक दोनों प्रकार के मन्त्र दिये गये हैं, जिससे यह पुस्तक अत्यन्त महत्त्वपूर्ण हो गई है। पुस्तक के प्रारम्भ में विष्णु भगवान् के पूजन की महत्ता और आवश्यकता का उल्लेख कर दिया है, जो कि सभी के लिये पठनीय और मननीय है।

---

प्राप्तिस्थान—चौखम्बा ओरियन्टालिया, वाराणसी, दिल्ली